## VOCABULARY

| | |
|---|---|
| स्तोत्रम् | devotional hymn |
| नमस्कार | salutation |
| प्रति | towards |
| द्रविणम् | wealth |
| तत्त्वम् | truth |
| कीदृश | of what form or nature |
| यादृश | of whatever sort |
| तादृश | of such nature |
| कर. | hand |
| अरविन्दम् | lotus |
| वि+नि+विश् (6 P) | to put |
| पत्रम् | leaf |
| वट | banyan tree |
| पुट म् | cup |
| शयान | lying |
| मुकुन्द | Krishna |
| कर्पूरगौर | white like camphor |
| करुण | compassion |
| अवतार | incarnation |
| सार -म् | essence |
| भुजगेन्द्र | best serpent |
| हार | necklace |
| भव | Śiva |
| भवानी | Pārvatī |
| साक्षात् | in person |
| परम् | highest |
| धर्म | righteousness |
| ग्लानि ( f ) | decline |
| अभ्युत्थानम् | rise |
| परित्राणम् | protection |
| विनाश | destruction |
| दुष्कृत् | evil-doer |
| संस्थापनार्थम् | need for re establishment |
| युग | age |
| अमङ्गलम् | inauspicious |
| हृदिस्थ | residing in the heart |
| आयतनम् | abode |
| निरामय | free from disease |
| भद्रम् | good, auspicious, favourable |
| मा आप्नुयात् | may not get |
| रमेश | Lord of Ramā or Sitā |
| नि+हन् | to kill, to destroy |
| निशाचर | one who wanders at night, i e. demon |
| चमू | army |
| परायणम् | object of devotion |
| परतर | higher |
| दास | servant |
| चित्तलय | absorption of mind |
| उद्+धृ ( 1 P ) | to raise, to save |
| असित | black |
| कज्जलम् | ink, collyrium |
| तरुवर | best, excellent tree |
| लेखनी | pen |
| उर्वी | earth |
| ईश | Lord |
| पारम् | end |

## ५. स्वभावः दुरतिक्रमः



पुरा किल महातपाः नाम मुनिः एकस्मिन् तपोवने प्रतिवसति स्म। एकदा सः मुनिः काकमुखात् परिभ्रष्टं मूषकशावकमाश्रमसमीपेऽपश्यत्। सः दयालुः तूर्णं मृतप्रायं तं मूषकं शीतलजलेनोद्जीवयत् नीवारकणैः च समवर्धयत्। ततः एकः बिडालः तं मूषकं खादितुमभ्यद्रवत्। मूषकश्च भयात् मुनेः क्रोडं प्राविशत्। तद् दृष्ट्वा मुनिः मूषकं स्वतपसः प्रभावेण मार्जारमकरोत्। ततः स मार्जारः कुक्कुरं दृष्ट्वा पलायनं अकरोत्। तस्मात् मुनिः तस्य मार्जारस्य कुक्कुररूपमकरोत्। अथैकदा कुक्कुरः व्याघ्रं दूराद् दृष्ट्वा भीतः। ततस्तेन मुनिना कुक्कुरः व्याघ्रतां नीतः। किन्तु सः मुनिः तं व्याघ्रं मूषकोऽयमित्येव पश्यन् आसीत्। अथ तं व्याघ्रं मुनिं च सहितौ दृष्ट्वा सर्वे जनाः अवदन्—"अयं व्याघ्रः वस्तुतः मुनिना परिवर्तितः मूषकः एवे"ति। एतत् श्रुत्वा सः व्याघ्रः अचिन्तयत्—"यावदयं मुनिः जीवति तावत् जनाः एवमेव मां पश्यन्ति मम स्वरूपस्यापवादः च न नश्यती"ति। एवं विचार्य सः मुनिं हन्तुं तत्परोऽभवत्। मुनिः व्याघ्रस्य दुराशयमवागच्छत्। शीघ्रं च तेन "पुनः मूषको भवे"त्युक्त्वा सः व्याघ्रः पुनः मूषकः एव कृतः। अतः प्राज्ञाः भणन्ति "स्वभावो दुरतिक्रमः" इति।

## VOCABULARY

| | | | |
|---|---|---|---|
| स्वभावः | one's own nature | बिडालः, मार्जारः | cat |
| दुरतिक्रम | difficult to change | अभि+द्रु (1 P.) | to attack |
| | | क्रोडम् | lap |
| महातपाः | of great penance | प्रभावः | power |
| परि+भ्रंश् (4 P.) | to fall down | पलायनम् | running away |
| दयालुः | kind-hearted | वस्तुतः | in fact |
| शावकः | young one | परिवर्तित | transformed |
| तूर्णम् | quickly | अपवादः | blame |
| मृतप्राय | almost dead | तत्पर | ready |
| नीवारकणः | rice-grain | दुराशयः | evil intention |
| उद्+जीव् (1 P.) (Caus.) | to bring back lo life | शीघ्रम् | quickly |
| | | प्राज्ञः | wise man |
| सम्+वृध् (1 Ā.) (Caus.) | to nourish | भण् (1 P.) | to say |

अयं कालः सविशेषं महत्त्वं धारयति, यतः तस्मिन् जनाः क्रिसमस–महोत्सवमत्युत्साहेन निर्विशन्ति। तद्दिने ते हिमपातमाकाङ्क्षन्ते, येन सः सार्थकः भवेत्। भारते मकरसङ्क्रान्तिदिने आबालवृद्धाः सर्वे जनाः पतङ्गक्रीडाभिः मोदन्ते।

## VOCABULARY

| | | | |
|---|---|---|---|
| शिशिरः | winter | दीर्घ | long |
| षड् | six | उष्णता | heat |
| ऋतु ( m. ) | season | प्रभातकाल | morning time, dawn |
| संहारः, चक्रम् | group, cycle | वातावरणम् | atmosphere |
| सौन्दर्यम् | beauty | धूमिल | foggy |
| हिमपातः | snowfall | ह्रदः | lake |
| बहुल | abundant, plentiful | आस्तृत | covered |
| अवकाशः | space, sky | पाश्चात्यदेशः | western country |
| दृश्यम् | sight, scene | महत्त्वम् | importance |
| विपुल | large | निस्+विश् (=निर्विश्) (6 P.) | to enjoy, to celebrate |
| राशि ( m. ) | pile | अत्युत्साहः | great enthusiasm |
| व्यवहारः | business, work | सार्थक | fruitful, meaningful |
| दुष्कर | difficult | मकरसङ्क्रांतिदिनम् | day of Sun's moving to the tropic of Capricorn |
| अवसरः | time, occasion | आबालवृद्ध | from children to old men |
| गोलकः | ball | पतङ्गक्रीडा | kite-flying |
| शुष्क | dry | | |
| पत्रहीन | leafless | | |
| तुषारः | snow, frost | | |
| आच्छादित | covered | | |
| आकर्षक | attractive | | |
| पाण्डुर | pale | | |
| ह्रस्व | short | | |

## ७. वसन्तसेनायाः अनुरागः



[ Vasantsenā, the rich and beautiful courtesan has fallen in love with the poor Cārudatta. She is sitting absent-mindedly with her maid, who wonders about her condition.]

वसन्तसेना—ततस्ततः ?

चेटी—किं ततस्ततः इति । न किञ्चित् मया भणितम् । अज्जुके, स्नेहेन पृच्छामि । किं भवती चिन्तयति ?

वसन्तसेना—त्वं किं तर्कयसि ?

चेटी—अज्जुका कमपि कामयते इति तर्कयामि ।

वसन्तसेना—सुष्ठु त्वया चिन्तितम् ।

चेटी—इच्छामि प्रष्टुम् । अस्ति कश्चिद् रमणीयः राजकुमारः ?

वसन्तसेना—रन्तुमिच्छामि न सेवितुम् ।

चेटी—किं नु विद्यारमणीयः कश्चिद् ब्राह्मणपुत्रः ?

वसन्तसेना—पूजनीयः खलु सः जनः ।

चेटी—किं नु कश्चिद् आगन्तुकः वणिक्पुत्रः ?

वसन्तसेना—मूढे, आशाभङ्गं का सहते ?

चेटी—तर्हि को सः ?

वसन्तसेना—हञ्जे, अस्ति सार्थवाहपुत्रः गुणवान् चारुदत्तो नाम ।
चेटी—हा धिक्, दरिद्रः खलु सः ।
वसन्तसेना—अत एव काम्यते । दरिद्रपुरुषसक्ता गणिका अवचनीया भवति ।
चेटी—अज्जुके, अपि मधुकराः मञ्जरीरहितं सहकारमाश्रयन्ते ?
वसन्तसेना—हञ्जे, अत एव ते मधुकराः इति ख्याताः ।

(चारुदत्ते द्वितीयेऽङ्के)

## VOCABULARY

| | | | |
|---|---|---|---|
| अज्जुका | mistress | दरिद्र | poor |
| सुष्ठु | well | सक्त | attached |
| पूजनीय | worthy of worship or honour, venerable | गणिका | courtesan |
| | | अवचनीया | free from reproach |
| आगन्तुकः | visitor | मधुकरः | bee |
| मूढा | foolish girl | मञ्जरी | mango-plossom |
| वणिक्, सार्थवाहः | merchant | रहित | devoid of |
| आशाभङ्गः | frustration, disappointment | सहकारः | mango tree |
| | | ख्यात | known |
| हञ्जा | a form of address for a maid | | |



# ८. श्रीकृष्णः



अयं कृष्णः। कृष्णस्य समग्रमेव स्वरूपं रसपूर्णमस्ति। कृष्णस्य वर्णः घनश्यामः वदनं च स्मितसुन्दरम्। सः गोपालकृष्णः इति प्रसिद्धः। तस्य बाल्यं गोकुल-वृन्दावनयोः व्रजभूमौ व्यतीतम्। अतः बालकृष्णः मस्तके मयूरपिच्छं, कण्ठे सितकुसुमानां मालां, करे मुरलीम्, अङ्गे च पीतमम्बरं धारयति। कृष्णः धेनूनां गोपीनां च नायकः। तस्य वेणुः तासां चित्तानि समाकर्षति। सर्वासु गोपीषु राधा कृष्णस्य प्रियतमा। यदा कृष्णः राधा-सहितः गोपगोपीनां मध्ये रासक्रीडां करोति, तदा सर्वे परममानन्दमनुभवन्ति।

कृष्णः मथुरानगर्यामजायत। तस्य माता देवकी, पिता च वसुदेवः। जातमात्र एव सः वसुदेवेन गोकुलं नीतः। नन्दः यशोदा च तस्य पालकपितरौ। बलदेवः बलरामः तस्य बन्धुः। बलरामेण सह सः आश्चर्यमयीः बालक्रीडाः आचरत्, असुराणां चोपद्रवम् [illegible]। अनन्तरं श्रीकृष्णः राजपदमधारयत्, प्रजां सुष्ठु अपालयत्, पाण्डवानां च सखा सहायकश्चाभवत्। महाभारतयुद्धे तस्य प्रियवयस्यस्यार्जुनस्य सारथित्वमभजत्; अन्ते च

भगवद्गीतामुपादिशत् । वर्तमाने काले पाश्चात्यदेशेष्वपि श्रीकृष्णस्यापूर्वा भक्तिः प्रवर्तते । कृष्णः प्रचलितं धर्ममशोधयत्, भगवद्भक्तिं च प्रासारयत् । अतः एव जनाः तं भगवान् श्रीकृष्णः इति मन्यन्ते भजन्ते च ।

## VOCABULARY

| | | | |
|---|---|---|---|
| समग्र | entire | धेनु (f.) | cow |
| स्वरूपम् | form | गोपी | milkmaid |
| रसपूर्ण | full of interest or joy | रासक्रीडा | group dance |
| | | आश्चर्यमयी | wondrous |
| घनः | rainy cloud | धवल | white |
| वदनम् | face | लीला | play |
| स्मितम् | smile | उपद्रवः | trouble |
| व्रजभूमि (f.) | pastoral land near Mathura | सखा, वयस्यः | friend |
| | | सहायकः | helpmate, ally |
| व्यतीत | spent | सारथि (m.) | charioteer |
| मस्तकम् | head | अपूर्व | unprecedented |
| पिच्छम् | feather | प्रचलित | prevalent |
| कण्ठः | neck | शोधय (Caus. of शुध् 6 P.) | to purify |
| मुरली, वेणु (m.) | flute | | |
| पीत | yellow | प्र+सृ (1 P.) | to spread |
| अम्बरम् | garment | | |

## ९. सुभाषितानि

भाषासु मुख्या मधुरा दिव्या गीर्वाणभारती ।
तस्माद्धि काव्यं मधुरं, तस्मादपि सुभाषितम् ॥१॥

हस्तस्य भूषणं दानं, सत्यं कण्ठस्य भूषणम् ।
श्रोत्रस्य भूषणं शास्त्रं, भूषणैः किं प्रयोजनम् ॥२॥

नरस्याभरणं रूपं, रूपस्याभरणं गुणः ।
गुणस्याभरणं ज्ञानं, ज्ञानस्याभरणं क्षमा ॥३॥

कन्या वरयते रूपं, माता वित्तं, पिता श्रुतम् ।
बान्धवाः कुलमिच्छन्ति, मिष्टान्नमितरे जनाः ॥४॥

* परोपकाराय फलन्ति वृक्षाः
परोपकाराय वहन्ति नद्यः ।
परोपकाराय दुहन्ति गावः
परोपकाराय सतां विभूतयः ॥५॥

पुण्यस्य फलमिच्छन्ति, पुण्यं नेच्छन्ति मानवाः ।
फलं पापस्य नेच्छन्ति, पापं कुर्वन्ति नित्यशः ॥६॥

शशिना च निशा, निशया च शशी
शशिना निशया च विभाति नभः ।
पयसा कमलम् कमलेन पयः
पयसा कमलेन विभाति सरः ॥७॥

विद्या विवादाय, धनं मदाय,
शक्तिः परेषां परिपीडनाय ।
खलस्य, साधोर्विपरीतमेतद्,
ज्ञानाय, दानाय च रक्षणाय ॥८॥

येषां न विद्या न तपो न दानं ज्ञानं न शीलं न गुणो न धर्मः ।
ते मर्त्यलोके भुवि भारभूताः मनुष्यरूपेण मृगाश्चरन्ति ॥९॥

* सुखार्थी च त्यजेत् विद्यां, विद्यार्थी च सुखं त्यजेत् ।
सुखार्थिनः कुतो विद्या कुतो विद्यार्थिनः सुखम् ॥१०॥

* यथा चित्तं तथा वाचा, यथा वाचा तथा क्रिया ।
चित्ते वाचि क्रियायां च महतामेकरूपता ॥११॥

भगवद्गीतामुपादिशत् । वर्तमाने काले पाश्चात्यदेशेऽपि श्रीकृष्णस्यापूर्वा भक्तिः प्रवर्तते । कृष्णः प्रचलितं धर्ममशोधयत्, भगवद्भक्तिं च प्रासारयत् । अतः एव जनाः तं भगवान् श्रीकृष्णः इति मन्यन्ते भजन्ते च ।

## VOCABULARY

| | | | |
|---|---|---|---|
| समग्र | entire | धेनु (f.) | cow |
| स्वरूपम् | form | गोपी | milkmaid |
| रसपूर्ण | full of interest or joy | रासक्रीडा | group dance |
| | | आश्चर्यमयी | wondrous |
| घनः | rainy cloud | धवल | white |
| वदनम् | face | लीला | play |
| स्मितम् | smile | उपद्रवः | trouble |
| व्रजभूमि (f.) | pastoral land near Mathura | सखा, वयस्यः | friend |
| | | सहायकः | helpmate, ally |
| व्यतीत | spent | सारथि (m.) | charioteer |
| मस्तकम् | head | अपूर्व | unprecedented |
| पिच्छम् | feather | प्रचलित | prevalent |
| कण्ठः | neck | शोधय (Caus. of शुध् 6 P.) | to purify |
| मुरली; वेणु (m.) | flute | | |
| पीत | yellow | प्र+सृ (1 P.) | to spread |
| अम्बरम् | garment | | |

## ९. सुभाषितानि

भाषासु मुख्या मधुरा दिव्या गीर्वाणभारती ।
तस्माद्धि काव्यं मधुरं, तस्मादपि सुभाषितम् ॥१॥

हस्तस्य भूषणं दानं, सत्यं कण्ठस्य भूषणम् ।
श्रोत्रस्य भूषणं शास्त्रं, भूषणैः किं प्रयोजनम् ॥२॥

नरस्याभरणं रूपं, रूपस्याभरणं गुणः ।
गुणस्याभरणं ज्ञानं, ज्ञानस्याभरणं क्षमा ॥३॥

कन्या वरयते रूपं, माता वित्तं, पिता श्रुतम् ।
बान्धवाः कुलमिच्छन्ति, मिष्टान्नमितरे जनाः ॥४॥

* परोपकाराय फलन्ति वृक्षाः
परोपकाराय वहन्ति नद्यः ।
परोपकाराय दुहन्ति गावः
परोपकाराय सतां विभूतयः ॥५॥

पुण्यस्य फलमिच्छन्ति, पुण्यं नेच्छन्ति मानवाः ।
फलं पापस्य नेच्छन्ति, पापं कुर्वन्ति नित्यशः ॥६॥

शशिना च निशा, निशया च शशी
शशिना निशया च विभाति नभः ।
पयसा कमलम् कमलेन पयः
पयसा कमलेन विभाति सरः ॥७॥

विद्या विवादाय, धनं मदाय,
शक्तिः परेषां परिपीडनाय ।
खलस्य, साधोर्विपरीतमेतद्,
ज्ञानाय, दानाय च रक्षणाय ॥८॥

येषां न विद्या न तपो न दानं ज्ञानं न शीलं न गुणो न धर्मः ।
ते मर्त्यलोके भुवि भारभूताः मनुष्यरूपेण मृगाश्चरन्ति ॥९॥

* सुखार्थी च त्यजेत् विद्यां, विद्यार्थी च सुखं त्यजेत् ।
सुखार्थिनः कुतो विद्या कुतो विद्यार्थिनः सुखम् ॥१०॥

* यथा चित्तं तथा वाचा, यथा वाचा तथा क्रिया ।
चित्ते वाचि क्रियायां च महतामेकरूपता ॥११॥

साहित्यसङ्गीतकलाविहीनः
साक्षात्पशुः पुच्छविषाणहीनः ।
तृणं न खादन्नपि जीवमानः
तद्भागधेयं परमं पशूनाम् ॥१२॥

क्षमा शस्त्रं करे यस्य दुर्जनः किं करिष्यति ।
अतृणे पतितो वह्निः स्वयमेवोपशाम्यति ॥१३॥

गौरवं प्राप्यते दानात् न तु वित्तस्य सञ्चयात् ।
स्थितिरुच्चैः पयोदानां, पयोधीनामधःस्थितिः ॥१४॥

उष्ट्राणां तु गृहे लग्नं, गर्दभाः शान्तिपाठकाः ।
परस्परं प्रशंसन्ति, अहो रूपम् अहो ध्वनिः ॥१५॥

अञ्जलिस्थानि पुष्पाणि वासयन्ति करद्वयम् ।
अहो सुमनसां प्रीतिः वामदक्षिणयोः समा ॥१६॥

आशा नाम मनुष्याणां काचिदाश्चर्यशृङ्खला ।
यद्बद्धा यथा प्रधावन्ति, मुक्तास्तिष्ठन्ति पंगुवत् ॥१७॥

उदये सविता रक्तो, रक्तश्चास्तमने तथा ।
सम्पत्तौ च विपत्तौ च महतामेकरूपता ॥१८॥

भवन्ति नम्राः तरवः फलागमैः
नवाम्बुभिः भूरिविलम्बिनो घनाः ।
अनुद्धताः सत्पुरुषाः समृद्धिभिः
स्वभाव एवैषः परोपकारिणाम् ॥१९॥

गते शोको न कर्तव्यो, भविष्यं नैव चिन्तयेत् ।
वर्तमानेन कालेन प्रवर्तन्ते विचक्षणाः ॥२०॥

अपूर्वः कोऽपि कोशोऽयं सरस्वत्याः विराजते ।
व्ययतो वृद्धिमायाति क्षयमायाति सञ्चयात् ॥२१॥

* न त्वहं कामये राज्यं न स्वर्गं नापुनर्भवम् ।
कामये दुःखतप्तानां प्राणिनामार्तिनाशनम् ॥२२॥

काले वर्षतु पर्जन्यः
पृथिवी सस्यशालिनी ।
देशोऽयं क्षोभरहितः
निर्भयाः सन्तु सज्जनाः ॥२३॥

Learn by heart the Ślokas marked by an asterisk.

## VOCABULARY

| | |
|---|---|
| भाषा | language |
| मुख्य | main, chief |
| दिव्य | divine |
| सुभाषितम् | good saying |
| भूषणम्, आभरणम् | ornament |
| दानम् | charity |
| श्रोत्रम् | ear |
| प्रयोजनम् | purpose |
| क्षमा | forgiveness |
| कन्या | marriageable girl |
| वित्तम् | wealth |
| श्रुतम् | education, learning |
| मिष्टान्नम् | delicious dinner |
| इतर | other |
| परोपकारः | other's benefit |
| विभूति (f.) | excellence |
| पुण्यम् | good deed |
| पापम् | bad deed |
| नित्यशः | always |
| शशिन् | moon |
| नभस् | sky |
| पयस् | water |
| वि+भा | to shine |
| विवादः | dispute, quarrel |
| मदः | pride |
| परिपीडनम् | harassment, oppression |
| खलः, दुर्जनः | wicked man |
| विपरीत | reverse, opposite |
| मर्त्यलोकः | mortal world |
| मृगः | animal |
| सुखार्थी | seeker of happiness |
| विद्यार्थी | seeker of knowledge |

| | |
|---|---|
| वाचा | speech |
| क्रिया | action |
| एकरूपता | uniformity |
| साहित्यम् | literature |
| सङ्गीतम् | music |
| कला | art |
| विहीन | without |
| भागधेयम् | luck |
| विषाणम् | horn |
| स्वयमेव | of itself |
| उप+शम् (4 P.) | to calm down |
| गौरवम् | dignity |
| सञ्चयः | accumulation |
| स्थिति (f.) | position, status |
| पयोदः | rainy cloud |
| अधः | below, low |
| उष्ट्रः | camel |
| लग्नम् | marriage |
| शान्तिपाठकः | reciter of sacred chants |
| ध्वनि (m.) | sound, voice |
| अञ्जलि (m.) | folded hands |
| सुमनस् | (1) flower (2) men of good mind |
| वाम | left |
| दक्षिण | right |
| आशा | hope, desire |
| आश्चर्यशृङ्खला | wonderful chain |
| पङ्गुवत् | as if crippled |
| उदयः | rise |
| सवितृ (m.) | Sun |
| रक्त | red |
| अस्तमनम् | setting |

नम्र — (1) bent (2) humble
भूरि — much
विलम्बिन् — (1) bending (2) hanging low
उद्धत — insolent, impudent
समृद्धि ( f. ) — prosperity
शोकः — grief
भविष्यम् — future
वर्तमान — present
विचक्षणः — wise man
कोशः — treasure
व्ययः — spending
क्षयः — depletion
अपुनर्भवः — absence of re-birth
आर्ति ( f ) — affliction
पर्जन्यः — rain
सस्यशालिनी — full of crop
क्षोभः — agitation, trouble
निर्भय — devoid of fear

# १०. चेटविदूषकयोः



[Vasantasenā is on her way to meet Cārudatta, her lover. Ceṭa, her servant, is sent by her to inform Cārudatta about her arrival. What follows is a humorous dialogue between the Ceṭa and the Vidūṣaka, who is Cārudatta's companion.]

(चेटः लोष्टगुटिकाः क्षिपति ।)

विदूषकः—(अवलोक्य) अरे, कुतः त्वमागतः ?

चेटः—अरे, एषा सा ।

विदूषकः—कैषा सा ?

चेटः—एषा सा ।

विदूषकः—किमिदानीं दास्याः पुत्र, एषा सा सा इति सर्पशब्दं करोषि ?

चेटः—अरे त्वमपि किं का का इति काकशब्दं करोषि ?

विदूषकः—तत्कथय ।

चेटः—(स्वगतम्) भवतु । एवं भणामि । (प्रकाशम्) अरे, प्रश्नं ते पृच्छामि ।

विदूषकः—अहं ते मस्तके पादं निक्षिपामि ।

चेटः—कथय तावत् । कस्मिन् काले चूताः मुकुलिताः भवन्ति ?

## ११. शीघ्रबुद्धिः वानरः



अस्त्येकस्मिन् नदीतटे महान् सदाफलः जम्बूपादपः। तस्मिन् पादपे रक्तमुखो नाम वानरः नद्यां च करालमुखो नाम मकरः वसतः। एकदा मकरं तीरे दृष्ट्वा सः उदारः वानरः तस्य स्वागतं कृत्वा तस्मै मधुराणि जम्बूफलानि यच्छति। एवं प्रतिदिनं तौ वानरमकरौ सहैव जम्बूफलानि खादतः। तयोः मैत्री च सञ्जायते। मकरः गृहं गत्वा भक्षितशेषाणि जम्बूफलानि स्वपत्न्यै प्रयच्छति। अथैकदा मकरी तं वदति—"यः सदैव अमृततुल्यानि फलानि भक्षयति तस्य हृदयमपि अमृतमयं भवति। यदि भार्यया ते प्रयोजनम्, तर्हि तस्य हृदयं मामानय। तेनाहमप्यमृता भवामि, त्वया सह चानेकभोगाननुभवामी"ति। सः प्रतिवदति—"प्रिये, मा मैवं वद। सः कपिः मम भ्रातेव। कथमहं तस्मै द्रुह्यामि। तस्मात् त्यज तव मिथ्याग्रहमि"ति। किन्तु मकरी तस्याः दुराग्रहं न त्यजति। मकरः सर्वथा निरुपायः खिन्नः च भवति। सः वानरसमीपमागत्य वदति—"भोः मित्र, अस्ति मम मनोहरं गृहं रमणीये तीरान्तरे। तव मित्रपत्नी त्वां सस्नेहं निमन्त्रयति। त्वयावश्यमागन्तव्यमि"ति। मर्कटः सानन्दं मकरस्य पृष्ठमारोहति। यदा सः कृतघ्नः मकरः अगाधे जलयागच्छति, तदा तस्य दुष्टाशयं वानराय कथयति। वानरः शीघ्रं वदति—"भद्र, यद्येवं तर्त्कि त्वया प्रथममेव नोक्तम्। अहम् सदैव मम हृदयं वृक्षस्य विवरे सुगुप्तं रक्षामि।

# १२. मित्राणाम् अभिनन्दनम्



(पीटरः मेरी च प्रविशतः ।)

डेविडः—अहो पीटर, कुतस्त्वम् । तव दर्शनेनातीव प्रसन्नोऽस्मि । अपि कुशली त्वम् ?

पीटरः—अथ किम् ? कथं त्वमसि ?

डेविडः—अहमपि कुशलः । स्वागतं युवयोः ।

पीटरः—इयं मे प्रियसखी मेरीनाम्नी ।

मेरी—नमस्ते ।

डेविडः—नमस्ते मेरि ।

पीटरः—बहुभ्यः मासेभ्यः अनन्तरं आवां मिलावः । मेरि, डेविडः मम सहाध्यायी आसीत । सः कुशलः विद्यार्थ्यस्ति । विशेषज्ञानसम्पादनार्थं सः अत्रागतः ।

डेविडः—कथं तव अभ्यासः प्रवर्तते ?

पीटरः—सुष्ठ्वेव । अप्ययं विद्यालयः ते रोचते ? अत्र वातावरणं रमणीयं दृश्यते ।

डेविडः—सम्यक् उक्तं त्वया । अयं विद्यालयः नातिविशालः । अत्र छात्राः सर्वविषयेषु अध्यापकानां व्यक्तिशः मार्गदर्शनं लभन्ते । हन्त, न मया युवाभ्यां किञ्चिदप्युपहृतम् । मया विस्मृतमेव । क्षन्तव्योऽहम् । मम गृहे फलानि सन्ति । तान्यानयामि । (आनयति) खादतं खादतम् ।

मेरी—मधुरमेतद् फलम्। किमेतद् ? न मया कदापि दृष्टम्।
डेविड —एतदाम्रफलम्, भारतस्य विशिष्ट फलम्।
मेरी—एव ननु ?
डेविड —मेरि, कस्तेऽध्ययनविषय ? कथं त्वमपि पीटर इव संस्कृतभाषाया वक्तुं समर्था ?
मेरी—अहं समाजकार्य-शास्त्रस्य विद्यार्थिन्यस्मि। किन्तु मयापि संस्कृतं वर्षद्वय कुतूहलात् अधीतम्।
डेविड —एतत् श्रुत्वाहं हृष्ट । तव विषय अप्यतिशोभन ।
पीटर —डेविड, पाश्चात्यतत्त्वज्ञानेन सह संस्कृतस्यापि विशेषाध्ययने किं त्व प्रवृत्तोऽसि ?
डेविड —अथ किम्। संस्कृतभाषाया साहित्ये च विशेषेण मे रुचिर्वर्तते। अस्माकं पुस्तकालयेऽपि वर्तते समृद्ध सस्कृतग्रन्थाना संग्रह ।
मेरी—तत्त्वज्ञानसंस्कृतभाषयो कथ सम्बन्ध ?
डेविड —सस्कृतभाषाया वर्तते प्रभूत तत्त्वज्ञानम्। पाश्चात्यभारतीयतत्त्वज्ञानपरम्परयो तुलना कर्तव्यैव ।
पीटर —बाढम्। का वेळा वर्तते ? आवयो अत्रागतयो बहु समय व्यतीत । अन्यस्मिन् काले अह तव पुस्तकान्यवलोकयामि। अधुनावाभ्या गन्तव्यमेव ।
मेरी —डेविड, तवातिथ्येनानुगृहीतास्मि। भवतु, आवा गच्छाव ।
डेविड —शुभ भवतु। गम्यता पुनर्दर्शनाय।

## VOCABULARY

| | | | |
|---|---|---|---|
| कुशली | well | अध्ययनविषय | field of study |
| प्रियसखी | dear friend | समाजकार्य-शास्त्रम् | science of social work |
| सहाध्यायी | classmate | | |
| विशेष | special, advanced | कुतूहलम् | curiosity, interest |
| सम्पादनम् | acquisition | तत्त्वज्ञानम् | philosophy |
| प्र + वृत् ( 1 Ā ) | to progress | रुचि | interest |
| अभ्यास | study | समृद्ध | rich |
| विशाल | large | सङ्ग्रह | collection |
| सम्यक् | right properly | सम्बन्ध | relation |
| व्यक्तिश | individual, personal | प्रभूत | abundant |
| मार्गदर्शनम् | guidance | परम्परा | tradition |
| उप + कृ ( 1 P ) | to offer | तुलना | comparison |
| दातव्य | fit to be for given | बाढम् | O kay |
| आम्रफलम् | mango fruit | वेळा | time |
| विशिष्ट | special | आतिथ्यम् | hospitality |
| | | अनुगृहीत | favoured ( Thank you ) |

# १३. बाह्यदर्शनं वञ्चयति ।



कस्मिंश्चित् अधिष्ठाने कोऽपि कुम्भकारः प्रतिवसति स्म। तस्य गृहेऽनेके अर्धभग्नानां घटानां खर्पराः आसन्। एकदा सः मदिरापानेनोन्मत्तः इतस्ततः प्रस्खलन् खर्परस्य तीक्ष्णाग्रस्योपरि पतितः। तेन तस्य ललाटं पाटितं, तस्य शरीरं च रुधिरेणाप्लावितम्। अपथ्यान्नस्य च सेवनात् तस्य प्रहारः करालतां गतः, कथञ्चित् च विरोपितः। किन्तु तस्य ललाटदेशे स्पष्टः व्रणः सञ्जातः। अथ कदाचित् तस्मिन् देशे दुर्भिक्षम् आगतम्। तदा सः कुम्भकारः क्षुधापीडितः आत्मनः कुटुम्बेन सह देशान्तरं गत्वा कस्यापि नृपस्य सेवकोऽभवत्। सोऽपि राजा तस्य ललाटे तं प्रहारव्रणं दृष्ट्वाऽचिन्तयत्—"वीरः पुरुषः कश्चिदेष यतः तस्य ललाटपट्टे प्रहारः वर्तते" इति। अतः सः राजा तं कुम्भकारं सर्वेषां सेनापतीनां मध्ये विशेषप्रसादेन पश्यति स्म। तेऽपि योधाः तस्य अधिकादरेणेर्ष्यामावहन्, परन्तु राजभयान्न किञ्चित् अवदन्।

अथ कालान्तरेण तस्य नृपते शत्रुणा सह युद्धमभवत् । तस्मिन् समये राजा त कुम्भकार निर्जने स्थाने आहूय पृच्छति स्म—"भो राजपुत्र, किं ते नाम, का च ते जाति , कस्मिन् सङ्ग्रामेऽयम् विशाल प्रहार तव ललाटे जात " इति । कुम्भकारोऽवदत्—"देव, नैप शस्त्रप्रहार । युधिष्ठिरनामा कुलालोऽह जात्या । मद्गेहेऽनेकानि कपालान्यासन् । कदाचित् मद्यवशात् अह खर्परोपरि पतितवान् । तस्य प्रहारस्य विकारेणेदृशो व्रणोऽजायते"ति । तत् श्रुत्वा स राजातीव लज्जित क्रुद्धश्च तमभणत्—"हे कलाल, वञ्चितोऽह समरप्रहाराभासेन ते भालचिह्नेन । तद् त्वमर्धचन्द्रग्रहणेनापसारमर्हसी"ति । कुम्भकारोऽवदत्—"मा मैवं करोतु । भवान् पश्यत्वेव मे रणे शौर्यमि' ति । राजा प्रतिभाषते—"भो त्व सर्वगुणसम्पन्नोऽसि । तथापि त्व मम राज्य त्यज, अथवा राजपुत्रा अवश्य तव वध कुर्वन्ति । यत ,यस्मिन् कुले त्वमुत्पन्नो शत्रुस्तत्र न हन्यत" इति । कुलालोऽपि तदाकर्ण्य सत्वर पलायित· एव ।

## VOCABULARY

| | | | |
|---|---|---|---|
| बाह्य | external | क्षुधापीडित | hunger-stricken |
| वञ्चय (Caus of वञ्च् 1 P ) | to deceive | वीर | brave |
| | | योध | warrior |
| अधिष्ठानम् | place | अधिकादर | special, greater regard |
| कुम्भकार , कुलाल | potter | ईर्ष्या | jealousy, envy |
| अर्धभग्न | half-broken | निर्जन | lonely |
| खर्पर , कपाल -म् | potsherd | आ + ह्वे (1 P ) | to call |
| मदिरा, मद्यम् | wine, liquor | सङ्ग्राम , समर -म् | war |
| उन्मत्त | intoxicated | जाति ( f ) | birth |
| इत तत | here and there | गेहम् | house |
| प्रस्खलन् | stumbling | मद्यवश म् | influence of liquor |
| तीक्ष्ण | sharp | | |
| ललाटम् | forehead | | |
| पाटित | split, torn | लज्जित | ashamed |
| रुधिरम् | blood | आभास | illusion, appearance |
| आप्लावित | smeared | | |
| अपथ्य | unhealthy, unwholesome | भालचिह्नम् | sign (scar) on the forehead |
| सेवनम् | taking | अर्धचन्द्रग्रहणम् | catching of the neck |
| प्रहार | wound | | |
| कथञ्चित् | somehow | अपसार | expulsion |
| विरोपित | healed | शौर्यम् | bravery |
| स्पष्ट | clear, outstanding | सम्पन्न | possessed of |
| व्रण | scar | वध | execution |
| दुर्भिक्षम् | famine | सत्वरम् | quickly, speedily |

## १४. विभोः विभूतयः

श्रीभगवानुवाच—

वेदानां सामवेदोऽस्मि देवानामस्मि वासवः ।
इन्द्रियाणां मनश्चास्मि भूतानामस्मि चेतना ॥२२॥

महर्षीणां भृगुरहं गिरामस्म्येकमक्षरम् ।
यज्ञानां जपयज्ञोऽस्मि स्थावराणां हिमालयः ॥२५॥

उच्चैःश्रवसमश्वानां विद्धि माममृतोद्भवम् ।
ऐरावतं गजेन्द्राणां नराणां च नराधिपम् ॥२७॥

आयुधानामहं वज्रं धेनूनामस्मि कामधुक् ।
प्रजनश्चास्मि कन्दर्पः सर्पाणामस्मि वासुकिः ॥२८॥

प्रह्लादश्चास्मि दैत्यानां कालः कलयतामहम् ।
मृगाणां च मृगेन्द्रोऽहं वैनतेयश्च पक्षिणाम् ॥३०॥

वृष्णीनां वासुदेवोऽस्मि पाण्डवानां धनञ्जयः ।
मुनीनामप्यहं व्यासः कवीनामुशना कविः ॥३७॥

नान्तोऽस्ति मम दिव्यानां विभूतीनां परन्तप ।
एष तूद्देशतः प्रोक्तो विभूतेर्विस्तरो मया ॥४०॥

यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा ।
तत्तदेवावगच्छ त्वं मम तेजोंऽशसम्भवम् ॥४१॥

(भगवद्गीतायां दशमेऽध्याये)

### विश्वरूपदर्शनम्

अर्जुन उवाच—

अमी च त्वां धृतराष्ट्रस्य पुत्राः
सर्वे सहैवावनिपालसङ्घैः ।
भीष्मो द्रोणः सूतपुत्रस्तथाऽसौ
सहास्मदीयैरपि योधमुख्यैः ॥२६॥

वक्त्राणि ते त्वरमाणा विशन्ति
दंष्ट्राकरालानि भयानकानि ।
केचिद्विलग्ना दशनान्तरेषु
संदृश्यन्ते चूर्णितैरुत्तमाङ्गैः ॥२७॥

यथा नदीनां बहवोऽम्बुवेगाः
समुद्रमेवाभिमुखा विशन्ति ।
तथा तवामी नरलोकवीरा
विशन्ति वक्त्राण्यभिविज्वलन्ति ॥२८॥
यथा प्रदीप्तं ज्वलनं पतङ्गा
विशन्ति नाशाय समृद्धवेगाः ।
तथैव नाशाय विशन्ति लोका–
स्तवापि वक्त्राणि समृद्धवेगाः ॥२९॥

(भगवद्गीतायां एकादशेऽध्याये)

## VOCABULARY

## ADHYĀYA X

| | | | |
|---|---|---|---|
| विभु (m.) | the All-pervading Lord | कामधुक् | wish-yielding celestial cow |
| विभूति (f.) | excellent manifestation | प्रजन | reproductive |
| | | कन्दर्पः | Cupid |
| भगवान् | Lord Kṛṣṇa | दैत्यः | demon |
| सामवेदः | one of the four Vedas | कालः | Time |
| | | कलयत् | reckoner |
| वासवः | Indra | मृगेन्द्रः | lord of animals, i.e. lion |
| इन्द्रियम् | sense-organ | | |
| भूतम् | creature | पक्षिन् | bird |
| चेतना | sentience | वैनतेयः | Garuḍa (eagle) |
| महर्षि (m.) | great sage | वृष्णिन् | kṣatriya clan |
| गिर् (f.) | speech | धनञ्जयः | Arjuna |
| जपयज्ञः | sacrifice of chanting | उशनस् | Śukracārya |
| | | अन्तः | end |
| स्थावरः | immovable object | परन्तपः | oppressor of foes |
| विद्धि (√विद्) | know (me) | उद्देशतः | in essence |
| अमृतोद्भव | born of (the churning for) nectar | प्रोक्त | stated |
| | | विस्तरः | extent |
| | | सत्त्वम् | thing |
| गजेन्द्रः | lordly elephant | श्रीमत् | opulent, glorious |
| नराधिपः | lord of men | ऊर्जितम् | vigorous |

| | |
|---|---|
| अवगच्छ (√अव+गम्) | know |
| तेजोंऽशः | portion of splendour |
| सम्भवः | product |

## ADHYĀYA XI

| | |
|---|---|
| अमी | those |
| धृतराष्ट्रः | blind king, father of the Kauravas |
| अवनिपाल | king, protector of earth |
| सङ्घ | multitude |
| सूतपुत्रः | Karṇa |
| अस्मदीय | ours |
| वक्त्रम् | mouth |
| त्वरमाण | hastening |
| दंष्ट्रा | jaw |
| भयानक | frightening |
| विलग्न | stuck |
| दशनान्तरम् | an interstice of teeth |
| सम्+दृश् (1 P) | to see |
| चूर्णित | crushed |
| उत्तमाङ्गम् | head |
| अम्बुवेगः | rapid stream |
| अभिमुख | facing |
| द्रु (1 P) | to flow |
| नरलोकवीर | hero in the world of men |
| प्रदीप्त | enkindled |
| ज्वलनम् | fire |
| पतङ्गः | moth |
| समृद्ध | accelerated |

❀

# १५. चन्द्रयात्रा



चन्द्रः कवीनां प्रियः। संस्कृतसाहित्ये चन्द्रस्य विविधानि गुणवर्णनानि विद्यन्ते। सः धवलतायाः शीतलतायाः च निधिः, अतः तस्य सितांशुः, हिमांशुः, सुधाकरः इत्यादीन्यभिधानानि सन्ति। चन्द्रस्य श्वेतबिम्बे श्यामः अङ्कोऽस्ति, येन तस्य सौन्दर्यमधिकं शोभते। तस्मात् सः शशाङ्कः मृगाङ्कः इति संज्ञाभिः अपि परिचितः। कवयः तेषाम् सौन्दर्यदृष्ट्या चन्द्रं पश्यन्ति।

अर्वाचीने युगे ननु विज्ञानस्य महत्त्वमस्ति। वैज्ञानिकानां दृष्टौ चन्द्रः समस्तसूर्यमण्डलस्यैकः अंशः एव। सोऽन्यग्रहाणामपेक्षया पृथिव्याः नेदिष्ठः। तस्मात् तैः चन्द्रस्य प्रत्यक्षमन्वेषणं कृतम्। अनेकान्यवकाशयानानि अवकाशयात्रिकाः च चन्द्रभूमौ पदमकुर्वन्। चन्द्रस्य तले प्रचण्डाः गर्ताः सन्ति। अतः तस्मिन् दूरतः शशाकारं चिह्नं दृश्यते।

अधुना समर्थाः वैज्ञानिकाः लोहितवर्णे मङ्गलग्रहेऽपि निर्मनुष्यमवकाशयानमवतारयन्ति, तत्र जीवनं वर्तते वा न वर्तते इत्यन्वेष्टुं प्रयतन्ते। बुद्धिमतामवकाशवैज्ञानिकानां हि दृष्टिः अविरतमूर्ध्वगामिनी। तस्मात् तैः गुरुशुक्रादीनाम् ग्रहाणामपि निरीक्षणायाद्भुतान्यवकाशयन्त्राणि विसृष्टानि।

अणुविज्ञानमवकाशविज्ञानं च मानवजातेः बुद्धिमत्त्वस्य प्रकृष्टावाविष्कारौ । तावुभावपि मनुष्याणां हितमावहतः । किन्तु अणुविज्ञानात् अवकाशविज्ञानं वरम्; यतः अणुप्रस्फोटकैः सृष्टेः सम्भावितस्य विनाशस्य भयं सततं विद्यते । किन्तु अवकाशविज्ञानात् अपि कदाचित् अनर्थो भवति इत्यल्पः संभवः । अवकाशविज्ञानं तु मनुष्यं विशालतरं अवकाशं नयति, विशालतरां च दृष्टिं यच्छति ।

## VOCABULARY

| | | | |
|---|---|---|---|
| अंशु ( m. ) | ray | अधुना | nowadays |
| बिम्बः-म् | orb | समर्थ | great |
| अङ्कः | mark | लोहित | red |
| संज्ञा | name | अविरतम् | ceaseless |
| परिचितः | familiar | ऊर्ध्वगामिनी | upward going |
| दृष्टि ( f. ) | perception | निरीक्षणम् | observation |
| अर्वाचीन | modern | अद्भुत | wonderful |
| विज्ञानम् | science | वि+सृज् ( 6 P. ) | to release |
| समस्त | entire | अणुविज्ञानम् | atomic science |
| अंशः | portion | प्रकृष्ट | highest |
| ग्रहः | planet | आविष्कारः | manifestation |
| अपेक्षा | relation | प्रस्फोटकः | bomb |
| नेदिष्ठ | nearest | सम्भावित | created |
| प्रत्यक्ष | direct | सततम् | constant |
| अन्वेक्षणम् | exploration | अनर्थः | calamity, disaster |
| अवकाशयानम् | space craft | सम्+भू (1 P.) | to be possible |
| प्रचण्ड | terrible | विशालतर | larger |
| गर्तः | crater | | |

## १६. प्रहेलिकाः

अपदो दूरगामी च साक्षरो न च पण्डित ।
अमुख स्पष्टवक्ता च यो जानाति स पण्डितः ॥१॥

कृष्णमुखी न मार्जारी द्विजिह्वा न च सर्पिणी ।
पञ्चभर्त्रा न पाञ्चाली यो जानाति स पण्डितः ॥२॥

क सञ्जघान कृष्णः
का शीतलवाहिनी गङ्गा ।
के दारपोषणरता
कं बलवन्त न बाधते शीतम् ॥३॥

केशवं पतित दृष्ट्वा पाण्डवाः हर्षनिर्भरा. ।
रुदन्ति कौरवाः सर्वे हा केशव हा केशव ॥४॥

अहं च त्वं च राजेन्द्र लोकनाथावुभावपि ।
बहुव्रीहिरहं राजन्षष्ठीतत्पुरुषो भवान् ॥५॥

रामाभिषेके मद्विह्वलायाः हस्ताच्च्युतो हेमघटस्तरुण्या. ।
सोपानमासाद्य करोति शब्दं ठठ ठंठ ठठठ ठठठम् ॥६॥

### VOCABULARY

| | | | |
|---|---|---|---|
| प्रहेलिका | riddle | शव | corpse |
| अपद् | footless | हर्षनिर्भर | full of joy |
| दूरगामी | going far | लोक | *world, country* |
| स्पष्टवक्तृ | speaking clearly | नाथ | master, Lord |
| पञ्चभर्त्री | *having five* husbands | अभिषेक | coronation |
| पाञ्चाली | Draupadi | मद्विह्वल | intoxicated |
| सञ्जघान | *killed* | च्युत | dropped |
| कम्बल | woolen rug | हेमघट | *golden jar* |
| केदार | water–basin | तरुणी | young maiden, woman |
| पोषणम् | support | सोपानम् | staircase |
| रुद् | to cry | आसाद्य | having encountered |
| क. | water | | |

# GLOSSARY (शब्दकोशः)

## Participles

| Roots | Past Passive Participle | Present Participle [ Active ] | Potential Passive Participle | Indeclinable Past Participle | Infinitive |
|---|---|---|---|---|---|
| अट्-(1 P) | अटित | अटत् | अटनीय, अटितव्य, आट्य | अटित्वा | अटितुम् |
| अर्च्-(1 P) | अर्चित | अर्चत् | अर्चनीय, अर्चितव्य, अर्च्य | अर्चित्वा | अर्चितुम् |
| अर्ह्-(1 P) | अर्हित | अर्हत् | अर्हणीय, अर्हितव्य, अर्ह्य | अर्हित्वा | अर्हितुम् |
| अस्-(4 P) | अस्त | अस्यत् | असनीय, असितव्य, आस्य | असित्वा, अस्त्वा | असितुम् |
| ईक्ष्-(1 A) | ईक्षित | ईक्षमाण | ईक्षणीय, ईक्षितव्य, ईक्ष्य | ईक्षित्वा | ईक्षितुम् |
| कथ्-(10 U) | कथित | कथयत्/कथयमान | कथनीय, कथयितव्य, कथ्य | कथयित्वा | कथयितुम् |
| कम्प्-(1 A) | कम्पित | कम्पमान | कम्पनीय, कम्पितव्य, कम्प्य | कम्पित्वा | कम्पितुम् |
| कुप्-(4 P) | कुपित | कुप्यत् | कोपनीय, कोपितव्य, कुप्य | कुपित्वा, कोपित्वा | कोपितुम् |
| कृष्-(1 P) | कृष्ट | कर्षत् | कर्षणीय, कर्षितव्य, कृष्य | कृष्ट्वा | कर्ष्टुम्, क्रष्टुम् |
| कृष्-(6 U) | कृष्ट | कृषत्, कृषमाण | कर्षणीय, कर्षितव्य, कृष्य | कृष्ट्वा | कर्ष्टुम्, क्रष्टुम् |
| क्रीड्-(1 P) | क्रीडित | क्रीडत् | क्रीडनीय, क्रीडितव्य, क्रीड्य | क्रीडित्वा | क्रीडितुम् |
| क्रुध्-(4 P) | क्रुद्ध | क्रुध्यत् | क्रोधनीय, क्रोधितव्य, क्रोध्य | क्रुद्ध्वा | क्रोद्धुम् |
| क्षम्-(1 A) | क्षान्त | क्षममाण | क्षमनीय, क्षन्तव्य/क्षमितव्य, क्षम्य | क्षमित्वा, क्षान्त्वा | क्षमितुम्, क्षन्तुम् |
| क्षम्-(4 P) | क्षान्त | क्षाम्यत् | क्षमनीय, क्षन्तव्य/क्षमितव्य, क्षम्य | क्षमित्वा, क्षान्त्वा | क्षमितुम्, क्षन्तुम् |
| क्षल्-(10 U) | क्षालित | क्षालयत्, क्षालयमान | क्षालनीय, क्षालयितव्य, क्षाल्य | क्षालयित्वा | क्षालयित्वा |
| क्षिप्-(6 U) | क्षिप्त | क्षिपत्, क्षिपमाण | क्षेपणीय, क्षेप्तव्य, क्षेप्य | क्षिप्त्वा | क्षेप्तुम् |
| क्षुभ्-(4 P) | क्षुभित, क्षुब्ध | क्षुभ्यत् | क्षोभणीय, क्षोभितव्य, क्षोभ्य | क्षुभित्वा, क्षोभित्वा | क्षोभितुम् |
| खन्-(1 U) | खात | खनत्, खनमान | खननीय, खनितव्य, खन्य | खनित्वा, खात्वा | खनितुम् |
| गण्-(10 U) | गणित | गणयत्, गणयमान | गणनीय, गणयितव्य, गण्य | गणयित्वा | गणयितुम् |
| गम्-(1 P) | गत | गच्छत् | गमनीय, गन्तव्य, गम्य | गत्वा | गन्तुम् |

| Roots | Past Pass. P. | Pr. P. | Pot. Pass. P. | Ind. Past P. | Inf. |
|---|---|---|---|---|---|
| गल् ( 1. P ) | गलित | गलत् | गलनीय, गलितव्य, गल्य | गलित्वा | गलितुम् |
| गै-( 1. P ) | गीत | गायत् | गानीय, गातव्य, गेय | गीत्वा | गातुम् |
| चर्-( 1. P ) | चरित | चरत् | चरणीय, चरितव्य, चर्य | चरित्वा | चरितुम् |
| चल्-( 1. P ) | चलित | चलत् | चलनीय, चलितव्य, चल्य | चलित्वा | चलितुम् |
| चिन्त् ( 10. U ) | चिन्तित | चिन्तयत्, चिन्तयमान | चिन्तनीय, चिन्तयितव्य, चिन्त्य | चिन्तयित्वा | चिन्तयितुम् |
| चुर् ( 10. U ) | चोरित | चोरयत्, चोरयमाण | चोरणीय, चोरयितव्य, चोर्य | चोरयित्वा | चोरयितुम् |
| जन्-( 4. A ) | जात | जायमान | जननीय, जनितव्य, जन्य | जनित्वा | जनितुम् |
| जल्प्-( 1. P ) | जल्पित | जल्पत् | जल्पनीय, जल्पितव्य, जल्प्य | जल्पित्वा | जल्पितुम् |
| जि-( 1. P ) | जित | जयत् | जयनीय, जेतव्य, जेय | जित्वा | जेतुम् |
| जीव्-( 1. P ) | जीवित | जीवत् | जीवनीय, जीवितव्य, जीव्य | जीवित्वा | जीवितुम् |
| डी-( 1. A ) | डयित | डयमान | डयनीय, डयितव्य, डेय | डयित्वा | डयितुम् |
| तड्-( 10. U ) | ताडित | ताडयत्, ताडयमान | ताडनीय, ताडयितव्य, ताड्य | ताडयित्वा | ताडयितुम् |
| तप्-( 1. P ) | तप्त (प्त) | तपत् | तपनीय, तप्तव्य, तप्य | तप्त्वा | तप्तुम् |
| तुष्-( 4. P ) | तुष्ट | तुष्यत् | तोषणीय, तोष्टव्य, तोष्य | तुष्ट्वा | तोष्टुम् |
| तॄ-( 1. P ) | तीर्ण | तरत् | तरणीय, तरितव्य/तरीतव्य, तार्य | तीर्त्वा | तरितुम्/तरीतुम् |
| त्यज्-( 1. P ) | त्यक्त | त्यजत् | त्यजनीय, त्यक्तव्य, त्याज्य | त्यक्त्वा | त्यक्तुम् |
| त्वर्-( 1. A ) | त्वरित, तूर्ण | त्वरमाण | त्वरणीय, त्वरितव्य, त्वार्य | त्वरित्वा | त्वरितुम् |
| दण्ड्-( 10. U ) | दण्डित | दण्डयत्, दण्डयमान | दण्डनीय, दण्डयितव्य, दण्ड्य | दण्डयित्वा | दण्डयितुम् |
| दह्-( 1. ) | दग्ध | दहत् | दहनीय, दग्धव्य, दाह्य | दग्ध्वा | दग्धुम् |

| Roots | Past Pass P. | Pr. P. | Pot. Pass. P. | Ind. Past P. | Inf. |
|---|---|---|---|---|---|
| दा-( 1. P ) | दत्त | यच्छत् | दानीय, दातव्य, देय | दत्वा | दातुम |
| दृश्-( 1. P ) | दृष्ट | पश्यत् | दर्शनीय, द्रष्टव्य, दृश्य | दृष्ट्वा | द्रष्टुम |
| धाव्-( 1. P ) | धावित | धावत् | धावनीय, धावितव्य, धाव्य | धावित्वा | धावितुम |
| धृ-( 1. U ) | धृत | धरत्, धरमाण | धरणीय, धर्तव्य, धार्य | धृत्वा | धर्तुम् |
| धृ-( 10. U ) | धारित | धारयत्, धारयमाण | धारणीय, धारयितव्य, धार्य | धारयित्वा | धारयितुम |
| नम्-( 1. P ) | नत | नमत् | नमनीय, नन्तव्य, नम्य | नत्वा | नन्तुम् |
| नश्-( 4. P ) | नष्ट | नश्यत् | नशनीय, नशितव्य/नष्टव्य, नाश्य | नशित्वा, नष्ट्वा | नशितुम्, नष्टुम |
| निन्द्-( 1. P ) | निन्दित | निन्दत् | निन्दनीय, निन्दितव्य, निन्द्य | निन्दित्वा | निन्दितुम |
| नी-( 1. U ) | नीत | नयत्, नयमान | नयनीय, नेतव्य, नेय | नीत्वा | नेतुम् |
| नृत्-( 4. P ) | नृत्त | नृत्यत् | नर्तनीय, नर्तितव्य, नृत्य | नर्तित्वा | नर्तितुम |
| पच्-( 1. U ) | पक्व | पचत्, पचमान | पचनीय, पक्तव्य, पाच्य | पक्त्वा | पक्तुम् |
| पठ्-( 1. P ) | पठित | पठत् | पठनीय, पठितव्य, पाठ्य | पठि[illegible] | पठितुम् |
| पत्-( 1. P ) | पतित | पतत् | पतनीय, पतितव्य, पात्य | पतित्वा | पतितुम् |
| पा-( 1. P ) | पीत | पिबत् | पानीय, पातव्य, पेय | पीत्वा | पातुम् |
| पीड्-( 10. U) | पीडित | पीडयत्, पीडयमान | पीडनीय, पीडयितव्य, पीड्य | पीडयित्वा | पीडयितुम |
| पुष्-( 4. P ) | पुष्ट | पुष्यत् | पोषणीय, पो[illegible] | पु[illegible]वा | [illegible] |
| पूज्-( 10. U ) | पूजित | पूजयत्, पूजयमान | पूजनी[illegible] | | |
| पूर्-( 10. U | [illegible]रित | पूरयत् [illegible] | | | |

| Roots | Past Pass. P. | Pr. P. | Pot. Pass. P. | Ind. Past P. | Inf. |
|---|---|---|---|---|---|
| बुध्-(1. U) | बुधित | बोधत्, बोधमान | बोधनीय, बोधितव्य, बोध्य | बुधित्वा, बोधित्वा | बोधितुम् |
| भक्ष्-(10. U) | भक्षित | भक्षयत्, भक्षयमाण | भक्षणीय, भक्षयितव्य, भक्ष्य | भक्षयित्वा | भक्षयितुम् |
| भज्-(1. U) | भक्त | भजत्, भजमान | भजनीय, भक्तव्य, भाज्य, भग्य | भक्त्वा | भक्तुम् |
| भाष्-(1. A) | भाषित | भाषमाण | भाषणीय, भाषितव्य, भाष्य | भाषित्वा | भाषितुम् |
| भिक्ष्-(1. A) | भिक्षित | भिक्षमाण | भिक्षणीय, भिक्षितव्य, भिक्ष्य | भिक्षित्वा | भिक्षितुम् |
| भू-(1. P) | भूत | भवत् | भवनीय, भवितव्य, भव्य | भूत्वा | भवितुम् |
| भूष्-(10. U) | भूषित | भूषयत्, भूषयमाण | भूषणीय, भूषयितव्य, भूष्य | भूषयित्वा | भूषयितुम् |
| भृ (1. U) | भृत | भरत्, भरमाण | भरणीय, भर्तव्य, भृत्य | भृत्वा | भर्तुम् |
| मद्-(4. P) | मत्त | माद्यत् | मदनीय, मदितव्य, माद्य | मदित्वा | मदितुम् |
| मन्-(4. A) | मत | मन्यमान | मननीय, मन्तव्य, मान्य | मत्वा, मनित्वा | मन्तुम् |
| मुच्-(6. U) | मुक्त | मुञ्चत्, मुञ्चमान | मोचनीय, मोक्तव्य, मोच्य | मुक्त्वा | मोक्तुम् |
| मुद्-(1. A) | मुदित, मोदित | मोदमान | मोदनीय, मोदितव्य, मोद्य | मुदित्वा, मोदित्वा | मोदितुम् |
| मृ-(6. A) | मृत | म्रियमाण | मरणीय, मर्तव्य, मार्य | मृत्वा | मर्तुम् |
| मृग्-(10. A) | मृगित | मृगयमाण | मृगयणीय, मृगयितव्य, मृग्य | मृगयित्वा | मृगयितुम् |
| यज्-(1. U) | इष्ट | यजत्, यजमान | यजनीय, यष्टव्य, याज्य | इष्ट्वा | यष्टुम् |
| यत्-(1. A) | यत्त | यतमान | यतनीय, यतितव्य, यत्य | यतित्वा | यतितुम् |
| याच्-(1. U) | याचित | याचत्, याचमान | याचनीय, याचितव्य, याच्य | याचित्वा | याचितुम् |
| युध्-(4. A) | युद्ध | युध्यमान | योधनीय, योद्धव्य, योध्य | युद्ध्वा | योद्धुम् |

| Roots | Past Pass P. | Pr. P. | Pot. Pass. P. | Ind. Past P. | Inf. |
|---|---|---|---|---|---|
| दा-(1. P) | दत्त | यच्छत् | दानीय, दातव्य, देय | दत्वा | दातुम |
| दृश्-(1. P) | दृष्ट | पश्यत् | दर्शनीय, द्रष्टव्य, दृश्य | दृष्ट्वा | द्रष्टुम |
| धाव्-(1. P) | धावित | धावत् | धावनीय, धावितव्य, धाव्य | धावित्वा | धावितुम |
| धृ-(1. U) | धृत | धरत्, धरमाण | धरणीय, धर्तव्य, धार्य | धृत्वा | धर्तुम् |
| धृ-(10. U) | धारित | धारयत्, धारयमाण | धारणीय, धारयितव्य, धार्य | धारयित्वा | धारयितुम |
| नम्-(1. P) | नत | नमत् | नमनीय, नन्तव्य, नम्य | नत्वा | नन्तुम् |
| नश्-(4. P) | नष्ट | नश्यत् | नशनीय, नशितव्य/नष्टव्य, नाश्य | नशित्वा, नष्ट्वा | नशितुम्, नष्टुम |
| निन्द्-(1. P) | निन्दित | निन्दत् | निन्दनीय, निन्दितव्य, निन्द्य | निन्दित्वा | निन्दितुम |
| नी-(1. U) | नीत | नयत्, नयमान | नयनीय, नेतव्य, नेय | नीत्वा | नेतुम् |
| नृत्-(4. P) | नृत्त | नृत्यत् | नर्तनीय, नर्तितव्य, नृत्य | नर्तित्वा | नर्तितुम |
| पच्-(1. U) | पक्व | पचत्, पचमान | पचनीय, पक्तव्य, पाच्य | पक्त्वा | पक्तुम् |
| पठ्-(1. P) | पठित | पठत् | पठनीय, पठितव्य, पाठ्य | पठित्वा | पठितुम् |
| पत्-(1. P) | पतित | पतत् | पतनीय, पतितव्य, पात्य | पतित्वा | पतितुम् |
| पा-(1. P) | पीत | पिबत् | पानीय, पातव्य, पेय | पीत्वा | पातुम |
| पीड्-(10. U) | पीडित | पीडयत्, पीडयमान | पीडनीय, पीडयितव्य, पीड्य | पीडयित्वा | पीडयितुम |
| पुष्-(4. P) | पुष्ट | पुष्यत् | पोषणीय, पोष्टव्य, पोष्य | पुष्ट्वा | पोष्टुम् |
| पूज्-(10. U) | पूजित | पूजयत्, पूजयमान | पूजनीय, पूजयितव्य, पूज्य | पूजयित्वा | पूजयितुम् |
| पूर्-(10. U) | पूरित | पूरयत्, पूरयमाण | पूरणीय, पूरयितव्य, पूर्य | पूरयित्वा | पूरयितुम् |
| प्रच्छ्-(6. P) | पृष्ट | पृच्छत् | प्रच्छनीय, प्रष्टव्य, प्रच्छ्य | पृष्ट्वा | प्रष्टुम् |
| फल्-(1. P) | फलित | फलत् | फलनीय, फलितव्य, फल्य | फलित्वा | फलितुम् |

| Roots | Past Pass. P. | Pr. P. | Pot. Pass. P. | Ind. Past P. | Inf. |
|---|---|---|---|---|---|
| बुध्-(1. U) | बुधित | बोधत्, बोधमान | बोधनीय, बोधितव्य, बोध्य | बुधित्वा, बोधित्वा | बोधितुम् |
| भक्ष्-(10. U) | भक्षित | भक्षयत्, भक्षयमाण | भक्षणीय, भक्षयितव्य, भक्ष्य | भक्षयित्वा | भक्षयितुम् |
| भज्-(1. U) | भक्त | भजत्, भजमान | भजनीय, भक्तव्य, भाज्य, भाग्य | भक्त्वा | भक्तुम् |
| भाष्-(1. A) | भाषित | भाषमाण | भाषणीय, भाषितव्य, भाष्य | भाषित्वा | भाषितुम् |
| भिक्ष्-(1. A) | भिक्षित | भिक्षमाण | भिक्षणीय, भिक्षितव्य, भिक्ष्य | भिक्षित्वा | भिक्षितुम् |
| भू-(1. P) | भूत | भवत् | भवनीय, भवितव्य, भव्य | भूत्वा | भवितुम् |
| भूष्-(10. U) | भूषित | भूषयत्, भूषयमाण | भूषणीय, भूषयितव्य, भूष्य | भूषयित्वा | भूषयितुम् |
| भृ (1. U) | भृत | भरत्, भरमाण | भरणीय, भर्तव्य, भृत्य | भृत्वा | भर्तुम् |
| मद्-(4. P) | मत्त | माद्यत् | मदनीय, मदितव्य, माद्य | मदित्वा | मदितुम् |
| मन्-(4. A) | मत | मन्यमान | मननीय, मन्तव्य, मान्य | मत्वा, मनित्वा | मन्तुम् |
| मुच्-(6. U) | मुक्त | मुञ्चत्, मुञ्चमान | मोचनीय, मोक्तव्य, मोच्य | मुक्त्वा | मोक्तुम् |
| मुद्-(1. A) | मुदित, मोदित | मोदमान | मोदनीय, मोदितव्य, मोद्य | मुदित्वा, मोदित्वा | मोदितुम् |
| मृ-(6. A) | मृत | म्रियमाण | मरणीय, मर्तव्य, मार्य | मृत्वा | मर्तुम् |
| मृग्-(10. A) | मृगित | मृगयमाण | मृगयणीय, मृगयितव्य, मृग्य | मृगयित्वा | मृगयितुम् |
| यज्-(1. U) | इष्ट | यजत्, यजमान | यजनीय, यष्टव्य, याज्य | इष्ट्वा | यष्टुम् |
| यत्-(1. A) | यत्त | यतमान | यतनीय, यतितव्य, यत्य | यतित्वा | यतितुम् |
| याच्-(1. U) | याचित | याचत्, याचमान | याचनीय, याचितव्य, याच्य | याचित्वा | याचितुम् |
| युध्-(4. A) | युद्ध | युध्यमान | योधनीय, योद्धव्य, योध्य | युद्ध्वा | योद्धुम् |

| Roots | Past Pass P | Pr. P. | Pot Pass P. | Ind. Past P. | Inf. |
|---|---|---|---|---|---|
| रक्ष्-(1 P) | रक्षित | रक्षत् | रक्षणीय, रक्षितव्य, रक्ष्य | रक्षित्वा | रक्षितुम् |
| रच्-(10 P) | रचित | रचयत् | रचनीय, रचयितव्य, रच्य | रचयित्वा | रचयितुम् |
| रभ्-(1 A) | रब्ध | रभमाण | रभणीय, रब्धव्य रभ्य | रब्ध्वा | रब्धुम् |
| रम्-(1. A) | रत | रममाण | रमणीय, रन्तव्य, रम्य | रत्वा, | रन्तुम् |
| रुच्-(1 A) | रुचित, रोचित | रोचमान | रोचनीय, रोचितव्य, रोच्य | रुचित्वा, रोचित्वा | रोचितुम् |
| रुह्-(1 P) | रूढ | रोहत् | रोहणीय, रोढव्य, रोह्य | रूढ्वा | रोढुम् |
| लङ्घ्-(1 A) | लङ्घित | लङ्घमान | लङ्घनीय, लङ्घितव्य, लङ्घ्य | लङ्घित्वा | लङ्घितुम् |
| लज्ज्-(6 A) | लज्जित | लज्जमान | लज्जनीय, लज्जितव्य, लज्ज्य | लज्जित्वा | लज्जितुम् |
| लभ्-(1 A) | लब्ध | लभमान | लभनीय, लब्धव्य, लभ्य | लब्ध्वा | लब्धुम् |
| लुभ्-(4 P) | लुब्ध | लुभ्यत् | लोभनीय, लोभितव्य, लोब्धव्य, लोभ्य | लोभित्वा,लुभित्वा लुब्ध्वा | लोभितुम्, लोब्धुम् |
| वद्-(1 P) | उदित | वदत् | वदनीय, वदितव्य, वाद्य | उदित्वा | वदितुम् |
| वन्द्-(1. A) | वन्दित | वन्दमान | वन्दनीय, वन्दितव्य, वन्द्य | वन्दित्वा | वन्दितुम् |
| वस्-(1. P) | उषित | वसत् | वसनीय, वस्तव्य, वास्य | उषित्वा | वस्तुम् |
| वह्-(1 U) | ऊढ | वहत्, वहमान | वहनीय, वोढव्य, वाह्य | ऊढ्वा | वोढुम् |
| वाञ्छ्-(1 P) | वाञ्छित | वाञ्छत् | वाञ्छनीय, वाञ्छितव्य, वाञ्छ्य | वाञ्छित्वा | वाञ्छितुम् |
| विद्-(4 A) | वित्त | विद्यमान | वेदनीय, वेत्तव्य, वेद्य | वित्त्वा | वेत्तुम् |
| विद्-(6 U) | विन्न, वित्त | विन्दत्, विन्दमान | वेदनीय, वेत्तव्य, वेदितव्य, वेद्य | विदित्वा, वेदित्वा | वेत्तुम् वेदितुम् |
| विश्-(6 P) | विष्ट | विशत् | वेशनीय, वेष्टव्य, वेश्य | विष्ट्वा | वेष्टुम् |
| वृत्-(1. A) | वृत्त | वर्तमान | वर्तनीय, वर्तितव्य, वृत्य | वर्तित्वा, वृत्त्वा | वर्तितुम् |
| वृध्-(1. A) | वृद्ध | वर्धमान | वर्धनीय, वर्धितव्य, वृध्य | वर्धित्वा, वृद्ध्वा | वर्धितुम् |
| व्रज् (1 P) | व्रजित | व्रजत् | व्रजनीय, व्रजितव्य, व्रज्य | व्रजित्वा | व्रजितुम् |

| Roots | Past Pass. P. | Pr. P. | Pot. Pass. P. | Ind. Past P. | Inf. |
|---|---|---|---|---|---|
| शंस्-(1. P) | शस्त | शंसत् | शंसनीय, शंसितव्य, शस्य/शंस्य | शंसित्वा, शस्त्वा | शंसितुम् |
| शम्-(4. P) | शान्त | शाम्यत् | शमनीय, शमितव्य, शम्य | शान्त्वा, शमित्वा | शमितुम् |
| शिक्ष्-(1. A) | शिक्षित | शिक्षमाण | शिक्षणीय, शिक्षितव्य, शिक्ष्य | शिक्षित्वा | शिक्षितुम् |
| शुभ्-(1. A) | शुभित, शोभित | शोभमान | शोभनीय, शोभितव्य, शोभ्य | शुभित्वा, शोभित्वा | शोभितुम् |
| शुष्-(4. P) | शुष्क | शुष्यत् | शोषणीय, शोष्टव्य, शोष्य | शुष्ट्वा | शोष्टुम् |
| श्रम्-(4. P) | श्रान्त | श्राम्यत् | श्रमणीय, श्रमितव्य, श्रम्य | श्रमित्वा, श्रान्त्वा | श्रमितुम् |
| श्लाघ्-(1. A) | श्लाघित | श्लाघमान | श्लाघनीय, श्लाघितव्य, श्लाघ्य | श्लाघित्वा | श्लाघितुम् |
| सह्-(1. A) | सोढ | सहमान | सहनीय, सहितव्य/सोढव्य, सह्य | सहित्वा, सोढ्वा | सहितुम्, सोढुम् |
| सिच्-(6. U) | सिक्त | सिञ्चत्, सिञ्चमान | सेचनीय, सेक्तव्य, सेच्य | सिक्त्वा | सेक्तुम् |
| सृ-(1. P) | सृत | सरत् | सरणीय, सर्तव्य, सार्य | सृत्वा | सर्तुम् |
| सृज्-(6. P) | सृष्ट | सृजत् | सर्जनीय, स्रष्टव्य, सृज्य/सर्ग्य | सृष्ट्वा | स्रष्टुम् |
| सेव्-(1. A) | सेवित | सेवमान | सेवनीय, सेवितव्य, सेव्य | सेवित्वा | सेवितुम् |
| स्था-(1. P) | स्थित | तिष्ठत् | स्थानीय, स्थातव्य, स्थेय | स्थित्वा | स्थातुम् |
| स्पृश्-(6. P) | स्पृष्ट | स्पृशत् | स्पर्शनीय, स्प्रष्टव्य/स्पर्ष्टव्य, स्पृश्य | स्पृष्ट्वा | स्प्रष्टुम्, स्पर्ष्टुम् |
| स्पृह्-(10. U) | स्पृहित | स्पृहयत्,स्पृहयमाण | स्पृहणीय, स्पृहयितव्य, स्पृह्य | स्पृहयित्वा | स्पृहयितुम् |
| स्फुर्-(6. P) | स्फुरित | स्फुरत् | स्फुरणीय, स्फुरितव्य, स्फोर्य | स्फुरित्वा | स्फुरितुम् |
| स्मि-(1. A) | स्मित | स्मयमान | स्मयनीय, स्मेतव्य, स्मेय | स्मित्वा | स्मेतुम् |
| स्मृ-(1. P) | स्मृत | स्मरत् | स्मरणीय, स्मर्तव्य, स्मार्य | स्मृत्वा | स्मर्तुम् |
| स्वाद्-(1. A) | स्वादित | स्वादमान | स्वादनीय, स्वादितव्य, स्वाद्य | स्वादित्वा | स्वादितुम् |
| हस्-(1. P) | हसित | हसत् | हसनीय, हसितव्य, हास्य | हसित्वा | हसितुम् |
| हृ-(1. U) | हृत | हरत्, हरमाण | हरणीय, हर्तव्य, हार्य | हृत्वा | हर्तुम् |

| Word | Meaning |
|---|---|
| सकाशम्<br>समीपम्<br>समक्षम्<br>समया<br>निकषा<br>अन्तिकम् | near, in front of |
| पुरः<br>पुरतः<br>पुरस्तात् | before, in front of |
| अग्रतः<br>अग्रे | before, in front of |
| अभितः | near, in the vicinity of |
| परितः<br>समन्ततः<br>सर्वतः | around, on all sides |
| दूरम् | far away |
| दूरतः | from afar |
| अधः<br>अधस्तात् | below, down |
| उपरि | above, upon |
| परतः<br>परस्तात्<br>परम् | beyond, further than, higher than |
| अन्तर् | in, into, inside |
| बहिः | outside |
| अन्तरा | in the middle, between |
| अन्तरे | in the midst |
| समम्<br>सह<br>साकम्<br>साधम् | with, together with |

| Word | Meaning |
|---|---|
| विना | without |
| अन्तरेण | without |
| ऋते | except. without |
| कृते | for the sake of |
| उच्चैः | aloft, loudly |
| नीचैः | low |
| शनैः | slowly |
| तूष्णीम् | silently |
| भृशम्<br>अति<br>अतीव | very much, exceedingly |
| ईषत् | little |
| अलम्<br>कृतम् | enough of |
| प्रायः<br>प्रायशः | mostly, generally |
| सुष्ठु | well, in a good manner |
| वृथा | in vain |
| स्थाने | rightly, justly, truly |
| स्वयम् | oneself |
| कामम् | at will, granted that |
| धिक् | fie upon |
| हि<br>खलु<br>ननु<br>नूनम् | indeed |

## Synonyms ( पर्यायाः ) of Common Words

Water = जलम्, सलिलम्, वारि, उदकम्, तोयम्, नीरम्, पानीयम्, अम्भस् (n.), अम्बु (n ), पयस् (n ), अप् ( feminine plural—अपः, आपः ).

River = नदी, सरित्, वाहिनी, पयस्विनी, निर्झरिणी, स्रोतस्विनी.

Sea, Ocean = सागरः, समुद्रः, जलधिः, तोयनिधिः, सिन्धुः, अर्णवः, अब्धिः, सरित्पतिः, उदधिः.

Cloud = मेघः, घनः, जलदः, पयोधरः, जीमूतः, वलाहकः, अभ्रम्.

Mountain = पर्वतः, गिरिः, अद्रिः, नगः, महीधरः.

Earth = पृथ्वी, पृथिवी, क्षिति, मही, धरणी, धरित्री

Sky = आकाशम्, अम्बरम्, अभ्रम्, गगनम्, खम्, नभस्, व्योमन्.

Sun = सूर्यः, भानुः, रविः, सवितृ, अर्कः, आदित्यः, भास्करः, सहस्रांशुः, घर्मांशुः, दिवाकरः.

Moon = चन्द्र , हिमांशुः, सितांशुः, शशिन्, शशाङ्कः, मृगाङ्कः, जैवातृकः.

Tree = वृक्षः, तरुः, पादपः, द्रुमः, शाखिन्

Bird = खगः, द्विजः, विहगः, पक्षिन् पतत्रिन्, विहङ्गमः.

Lotus = कमलम्, पुण्डरीकम्, अब्जम्, पद्मम्, उत्पलम्, सरोजम्, अरविन्दम्, राजीवम्, नलिनम्

Beautiful = सुन्दर, चारु, कान्त, रमणीय, रम्य, रुचिर, शोभन, सुभग, सुरूप, सुषम, दर्शनीय, मनोज्ञ, मनोहर, हृद्य.

Man = जनः, मनुष्यः, मानवः, मर्त्यः, द्विपदः, मानुषः, नरः, पुरुषः.

Woman = नारी, स्त्री, वनिता, अबला, महिला, अङ्गना, योषित्.

Learned Man = पण्डितः, बुध , सूरिन्, प्राज्ञ , धीमत्, विचक्षणः, मनीषिन्, विद्वस्.

God = देवः, सुरः, अमरः, गीर्वाणः, त्रिदशः, देवता, दिवौकस्, दानवारिः, विबुधः, निर्जरः, निलिम्पः.

## Parts of the Body

| | | | |
|---|---|---|---|
| शीर्षम् | head | स्कन्धः | shoulder |
| केशाः | hair | हृदयम् | heart |
| ललाटम्, भालम् | forehead | वक्षस् | chest |
| नेत्रम् | eye | उदरम् | belly |
| कर्णः | ear | बाहुः, भुजः | arm |
| नासिका | nose | हस्तः, करः | hand |
| कपोलः | cheek | करतलम् | palm |
| दन्तः | tooth | अङ्गुलिः | finger |
| ओष्ठः | lip (upper) | अङ्गुष्ठः | thumb |
| अधरः | lip (lower) | जानुः | knee |
| कण्ठः | throat | पादः | leg |
| ग्रीवा | neck | चरणः–म् | foot |
| चिबुकम् | chin | नखः–म् | nail |

## Animals ( पशवः )

| | | | |
|---|---|---|---|
| धेनुः | cow | गर्दभः | donkey |
| अश्वः | horse | ऋक्षः | bear |
| गजः | elephant | वानरः | monkey |
| व्याघ्रः | tiger | मृगः | deer |
| सिंहः | lion | वराहः | boar |
| कुक्कुरः | dog | शशः | rabbit |
| मार्जारः | cat | नकुलः | mongoose |
| महिषः | buffalo | सर्पः | serpent |
| वृषभः | bull | मकरः, नक्रः | crocodile |
| वृकः | wolf | मण्डूकः | frog |
| अजः | goat | मत्स्यः | fish |
| मेषः | sheep | पिपीलिका | ant |
| उष्ट्रः | camel | कूर्मः | tortoise |
| शृगालः | jackal | | |

## Birds ( खगाः )

| | | | |
|---|---|---|---|
| चटका | sparrow | बकः, सारसः | crane, stork |
| काकः | crow | मयूरः | peacock |
| शुकः | parrot | हंसः | goose, swan |
| कपोतः | pigeon | कुक्कुटः | cock |
| उलूकः | owl | कोकिलः | cuckoo |
| गरुडः | eagle | भ्रमरः | bee |

## Days ( वाराः वासराः )

| | | | |
|---|---|---|---|
| सोमवार | Monday | शुक्रवारः | Friday |
| मङ्गलवार | Tuesday | शनिवारः | Saturday |
| बुधवार | Wednesday | रविवार | Sunday |
| गुरुवार | Thursday | | |

## Months ( मासाः ) and Seasons ( ऋतवः )

| | | | | | |
|---|---|---|---|---|---|
| कार्त्तिक | हेमन्त | November | वैशाख | ग्रीष्म | May |
| मार्गशीर्ष | Early Winter | December | ज्येष्ठ | Summer | June |
| पौष | शिशिरः | January | आषाढ | वर्षा | July |
| माघ | Winter | February | श्रावण | Monsoon | August |
| फाल्गुन | वसन्त | March | भाद्रपद | शरद् | September |
| चैत्र | Spring | April | आश्विन | Autumn, Fall | October |

## Zodiac ( राशिचक्रम् )

| | |
|---|---|
| Aries | मेष( Mesa ) |
| Taurus | वृषभ( Vrsabha ) |
| Gemini | मिथुन( Mithuna ) |
| Cancer | कर्क( Karka ) |
| Leo | सिंह( Simha ) |
| Virgo | कन्या( Kanya ) |
| Libra | तुला( Tulā ) |
| Scorpio | वृश्चिक( Vrscika ) |
| Sagittarius | धनुस्( Dhanus ) |
| Capricorn | मकर( Makara ) |
| Aquarius | कुम्भ( Kumbha ) |
| Pisces | मीन( Mina ) |

## Colours ( वर्णाः )

| | | | |
|---|---|---|---|
| श्वेत | White | पीत | Yellow |
| श्याम | Black | पाटल | Pink |
| नील | Blue | कपिश | Brown |
| रक्त | Red | नीललोहित | Violet |
| हरित | Green | | |

# Outstanding Sanskrit Poets and their Important Works

| Poet | Works | Forms |
|---|---|---|
| व्यासः | महाभारतम् | ( महाकाव्यम्, Great Epic ) |
| वाल्मीकिः | रामायणम् | ( महाकाव्यम्, Great Epic ) |
| भासः | स्वप्नवासवदत्तम् | ( नाट्यम् Play ) |
| | प्रतिज्ञायौगन्धरायणम् | ( नाट्यम् ) |
| अश्वघोषः | बुद्धचरितम् | ( महाकाव्यम्, Epic ) |
| कालिदासः | मेघदूतम् | ( काव्यम्, Poem ) |
| | कुमारसम्भवम् | ( महाकाव्यम् ) |
| | रघुवंशम् | ( महाकाव्यम् ) |
| | अभिज्ञानशाकुन्तलम् | ( नाट्यम् ) |
| शूद्रकः | मृच्छकटिकम् | ( नाट्यम् ) |
| दण्डिन् | दशकुमारचरितम् | ( गद्यम्, Prose Composition ) |
| बाणः | कादम्बरी, हर्षचरितम् | ( गद्यम् ) |
| हर्षः | नागानन्दम् | ( नाट्यम् ) |
| सुबन्धु | वासवदत्ता | ( गद्यम् ) |
| विशाखदत्त | मुद्राराक्षसम् | ( नाट्यम् ) |
| भर्तृहरिः | शतकत्रयम् | ( काव्यम् ) |
| भारविः | किरातार्जुनीयम् | ( महाकाव्यम् ) |
| माघः | शिशुपालवधम् | ( महाकाव्यम् ) |
| भवभूतिः | उत्तररामचरितम् | ( नाट्यम् ) |
| श्रीहर्षः | नैषधीयम् | ( महाकाव्यम् ) |
| जयदेवः | गीतगोविन्दम् | ( काव्यम् ) |
| जगन्नाथः | गङ्गालहरी | ( काव्यम् ) |
| | भामिनीविलासः | |

## Vedas ( वेदाः )

| | |
|---|---|
| ऋग्वेदः | ( Ṛg–Vedaḥ ) |
| यजुर्वेदः | ( Yajur–Vedaḥ ) |
| सामवेदः | ( Sāma–Vedaḥ ) |
| अथर्ववेदः | ( Atharva–Vedaḥ ) |

## Human Goals ( पुरुषार्थाः )

| | |
|---|---|
| धर्मः | Moral and Religious Duty |
| अर्थः | Wealth |
| कामः | Pleasure |
| मोक्षः | Final Liberation |

## Stages of Human Life ( आश्रमाः )

| | |
|---|---|
| ब्रह्मचर्य-आश्रमः | Life of a Student |
| गृहस्थ-आश्रमः | Life of a House-holder |
| वानप्रस्थ-आश्रमः | Life of a Hermit |
| संन्यस्त-आश्रमः | Life of a Mendicant |

